# प्रौढमनोरमा

https://sa.wikisource.org/s/zn6

## प्रौढमनोरमा (अव्ययीभावान्ता)

(वैयाकरणसिद्धान्तकौमुद्याः व्याख्याग्रन्थः)
प्रणेता- भट्टोजिदीक्षितः

**।। मङ्गलाचरणम्।।**

ध्यायं ध्यायं परं ब्रह्म स्मारं स्मारं गुरोर्गिरः।

सिद्धान्तकौमुदीव्याख्यां कुर्मः प्रौढमनोरमाम्।।

**।। अथ संज्ञाप्रकरणम्।।**

**"हयवरट्" (मा. सू. 5)** हकारोपदेशः, अट्-अश्-हश्-इण्ग्रहणेषु हकारग्रहणार्थः। "अर्हेण" "अड्व्यवायेऽपि" इति णत्वम्। "देवा हसन्ति" "भोभगो" इति रोर्यत्वम्। "देवो हसति" "हशि च" इत्युत्वम्। "लिलिहिढ्वे" "लिलिहिध्वे" "विभाषेटः" इति वा ढः।

**"हल्"** इदं सूत्रं वल्-रल्-झल्-शल्षु हकारग्रहणार्थम्। "रुदिहि" "स्वपिहि" "रुदादिभ्यः सार्वधातुके" इति वलादिलक्षण इट्। "स्निहित्वा" "स्नेहित्वा" "रलो व्युपधाद्" इति वा कित्त्वम्। "अदाग्धाम्" "झलो झलि" इति सकारलोपः। "अलिक्षत्" "शल इगुपधात्" इति क्सः।

**सूत्रेऽन्त्यमिति।** हलि अन्त्यमिति विग्रहे "सप्तमी" इति योगविभागात् "सुप्सुपा"(प.सू.2।1।4) इति वा समास इति भावः। यद्वा षष्ठीतत्पुरुषोऽयम्। स्यादेतत्, हलित्येकशेषस्यैव तन्त्रावृत्त्येकशेषान्यतममस्तु। हस्य ल् इति च व्याख्यास्यते। सामीप्यं षष्ठ्यर्थः। यद्वा, मास्तु तन्त्रादि, अस्तु समाहारद्वन्द्वो हल् च ल् चेति।लकारस्य संयोगान्तस्य लोप इति चेत् ?

मैवम्, आद्ये समासस्य क्लिष्टत्वात्। न हि "ब्राह्मणकम्बल" इत्यादौ ब्राह्मणसमीपवर्त्यन्यदीयः कम्बलः प्रतीयते, न वा चित्रगुशब्दाच्चित्रगवीणां समीपवर्ती वृक्षादिः प्रतीयते। अत एव अनन्तरादिषु न समासोऽनभिधानादिति स्पष्टमाकरे। किं बहुना "ब्राह्मणस्य कम्बलः' "चित्रा गावोऽस्य' इति व्यस्तप्रयोगोऽपि तत्रानिष्टः।

द्वितीयेऽपि संयोगान्तलोपो दुर्लभः, यणः प्रतिषेधारम्भात्। तत्प्रत्याख्यानपक्षेऽपि "झलो झलि" (पा.सू.8।2।26)इत्यतो झल्ग्रहणमपकृष्य झलो लोपविधानाच्च। किंच पदार्थबोधं विना वाक्यार्थबोधासम्भवेन हल्प्रत्याहारसिद्धेः प्रागेतत्सूत्रार्थाबोधे प्रसक्ते तदुद्धारार्थोऽयं यत्नः। अस्यां चावस्थायां हल्शब्दार्थाप्रसिद्धौ द्वन्द्व एव दुर्लभः सहविवक्षाया असम्भवात्। तस्माद्यथोक्तमेव न्याय्यम्।

**मध्यगानामिति।** आद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय आक्षिप्यते; तस्य च युगपल्लक्ष्ये प्रयोगासम्भवात्तदवयवेष्ववतरन्ती संज्ञा मध्यगेषु विश्राम्यति, नत्वाद्यन्तयोः, संज्ञास्वरूपान्तर्भावेण तयोः पारार्थ्यनिर्णयादिति भावः।

**स्वस्य चेति।** "स्वं रूपमित्यनुवृतेः । स्वं रूपं चादेरेव गृह्यते, नान्त्यस्य अन्त्येनेत्यप्रधानतृतीयानिर्देशात्। सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात्।

**आद्योच्चारणमिति।** यद्यप्युपदिश्यतेऽनेनेति करणव्युत्पत्या शास्त्रमुपदेश इति भाष्यवृत्त्यादिषु व्याख्यातं तथापि तत्प्रौढिवादमात्रम्। करणे घञो दुर्लभत्वात्, ल्युटा बाधात्। न च घः, असंज्ञात्वात्। "प्रायेण संज्ञायाम्" इति व्याख्यानस्य क्लिष्टत्वात्। नह्युपाधेरुपाधिर्भवतीत्यादिना भाष्यकृताऽवहेलनाच्च। अत एव घापवादो हलश्चेति घञपीह न। बाहुलकन्त्वगतिकगतिः। अत एव "प्रक्रियन्ते शब्दा याभिः" इति करणव्युत्पत्तिरपि परास्ता। तथा च वार्तिकम्- "अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेन" इति।

अतो भाव एव प्रत्ययो न्याय्य इति भावः।

यत्तु धातुसूत्रेत्यादि पठन्ति। यच्च व्याचक्षते- "करणव्युत्पत्त्या पूर्वार्धोपात्तानामुपदेशत्वं, कर्मव्युत्पत्त्या त्वागमादीनाम्। उणादिलिङ्गानुशासनयोरपि सूत्रत्वात्सिद्धे पृथगुपादानं गोबलीवर्दन्यायेन। एवं गणत्वादेव सिद्धे धातोरपि" इत्यादि।

अत्रेदं वक्तव्यम्-- किमेषामुपदेशसंज्ञा, उत योगमात्रम् ?

नाद्यः, संज्ञायाः शास्त्रकारैरनुक्तेः, असंज्ञात्वात् घप्रत्ययो नेति भाष्योक्तेश्च। अस्मदादिकृतसंज्ञायाः शास्त्रव्यवस्थापकत्वेऽतिप्रसङ्गाच्च। "आमोऽमित्वमदन्तत्वात्" इत्यादिस्वपरग्रन्थविरोधाच्च, न ह्युत्सृष्टानुबन्धस्यामो न प्रत्ययत्वं, येन मित्वं न भवेत्। किञ्चैवं प्रत्ययविधौ पञ्चम्याः षष्ठीप्रकल्पकत्वे सनः सनेवादेशोऽस्त्वित्याशङ्क्योपदेशाभावात्संज्ञा न स्यादिति भाष्यकैयटोक्तं व्याकुप्येत। किञ्च "न धातुलोप" इति सूत्रे "धातुग्रहणं किम् ? लूञ् लविता, पूञ् पविता" इति भाष्यम्, "उपदेश एवानुबन्धलोपे कृते ततो धातुसंज्ञा" इत्येवंपरः कैयटग्रन्थश्च विरुध्येत। अपि च, "घ्वसोरेद्धौ"(पा.सू.6|4|119) इति सूत्रे लोपश्चेति द्विशकारको निर्देशः, द्वितीयः शकार इदिति अलोन्त्यसूत्रस्थभाष्यकैयटादिकमपि विरुध्येत।

न द्वितीयः, योगस्यैव पुरस्कारे परिगणनस्य व्यर्थत्वात्। धात्वादिषु करणव्युत्पत्तिरागमादिषु नेति वैषम्यस्य दुरुपपादत्वाच्च। उपदेशताप्रयोजकधातुत्वादि-रूपोपाध्यवच्छिन्नसमुदायान्त्यं हल् इत् इत्यर्थ इति स्वग्रन्थविरोधाच्च।

पक्षद्वयेऽपि लिङ्गानुशासनस्य प्रकृतानुपयोगात्। लोपश्चेति शकारस्यासंग्रहाच्च।"आदेच उपदेशे" (पा.सू.6|1|45) "उपदेशेऽत्वतः"(पा.सू.7|3|62) इत्यादावाद्योच्चारणस्यैवोपदेशपदार्थतायाः सर्वसंमतत्वाच्चेति दिक्।।

"**उपदेशेऽजनुनासिक इत्" (पा. सू. 1.3.2)।।** यद्यप्यत्रोपजीव्यत्वादनुनासिकसंज्ञा प्रथमं वक्तुमुचिता, तथापि नासिकामनुगत इति योगाश्रणेनैव गतार्थत्वाद् "अनुनासिकसंज्ञासूत्रं मन्दप्रयोजनम्" इति ध्वनयितुं नेहोपन्यस्तम्।

उपदेशे किम् ? "अभ्र आँ अपः"। यद्यपीह "उञः" "ऊँ"(पा.सू.1|1|17,18) इत्यत्रेव विधानसामर्थ्यान्नेत्वमिति सुवचम्, तथाप्युत्तरार्थमवश्यं कर्तव्यमुपदेशग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम्।

अच् किम् ? मनिनो मकारस्य मा भूत्। "प्रतिज्ञायते इति प्रतिज्ञा"। "आतश्चोपसर्गे" (पा.सू.3|3|106) इति कर्मण्यङ्। प्रतिज्ञा आनुनासिक्यं येषामिति विग्रहः। एवं च "प्ररतिज्ञासमधिगम्ये प्रतिज्ञाशब्दस्य लक्षणा' इति क्लिष्टं व्याख्यानं नाश्रयणीयम्, "पाणिन्युपज्ञं व्याकरणम्" इत्यादिष्विव लक्षणां विनैव निर्वाहात्। यद्यपि सूत्रकारकृतोऽनुनासिकपाठ इदानीं परिभ्रष्टस्तथापि वृत्तिकारादिव्यवहारबलेन यथाकार्यं प्राक् स्थित इत्यनुमीयत इति भावः।

ननु रलयोरिति न्यूनं, टकारस्यापि मध्यगतत्वादित्यत आह-- **प्रत्याहारष्विति**। व्यवह्रियन्ते इति। प्रत्याह्रियन्ते= संक्षिप्यन्ते वर्णा यत्रेति बाहुलकादधिकरणे घञ्। यद्यपि योगमात्रमकारादिसंज्ञास्वतिप्रसक्तं तथापि योगरूढिरिति भावः । प्रत्याहाराश्चैकचत्वारिंशदिति प्राञ्चः। चतुर्दशसूत्रीस्थैर्हल्भिरिद्भिः कृता अष्टाध्याय्यां व्यवहृता एकचत्वारिंशदिति तस्यार्थः। तेन सुप्तिङादीनां, रप्रत्याहारस्य, "चयो द्वितीयाः" इति वार्तिकस्थस्थ"चय्"प्रत्याहारस्य चाधिकेऽप्यदोषः। यत्तु "ञमङन्ताड्डः" "यमिर्ञमन्तेष्वनिडेक इष्यते" इति च "ञम्" वार्तिककृता व्यवहृत इत्याहुः, तद्रभसाऽभिधानम्, आद्यस्योणादिसूत्रत्वात् , द्वितीयस्य व्याघ्रभूतिकारिकास्थत्वात्; इत्यास्तां तावत्। एष च संख्यानियमो नातीवोपयुज्यत इत्युपेक्षितः।

**ऊकालोऽच् (पा. सू. १।२।२७) ह्रस्वदीर्घप्लुत** इति समाहारद्वन्द्वः। सौत्रं पुंस्त्वम्। **वां काल इवेति**। फलितार्थकथनमिदम्। विग्रहस्तु वः कालो यस्येति बोध्यः। ऊशब्देन स्वोच्चारणकालो लक्ष्यते।

**आये इति।** "निपाता आद्युदात्ताः" (फि.सू.12 पा4) इत्याकार उदात्तः, यच्छब्दस्तु फिट्सूत्रेण। **अर्वाङ् इति।** अकारोऽनुदात्तः।

**तस्यादितः (पा. सू. १।२।३२) अतन्त्रमिति।** "उपेयिवान्" (पा. सू. 3|2|102) इत्यत्रोपसर्ग इवाविवक्षितमित्यर्थः। ननु तत्र "ईयिवांसमतिस्रिधः" इत्यादिप्रयोगदर्शनादविवक्षाऽस्तु, इह त्वविवक्षायां प्रमाणं किम् ? इति चेल्लक्ष्यदर्शनं प्रातिशाख्यादिकं चेति गृहाण। तथा हि-- "येराः' इत्यत्रैकारः, "तनूनपात्' "शचीपतिम्' इत्यत्र पदपाठे ऊदितौ चार्धोदात्तौ इति सकलबह्वृच्प्रसिद्धम्। तनूनपाच्छचीपतिशब्दयोः "उभे वनस्पत्यादिषु युगपत्" (पा.सू.6|2|140)इति पूर्वोत्तरपदयोराद्युदात्तत्वे कृते "अनुदात्तं पदमेकवर्जम्"(6|1|158)इति शेषनिघातः। पूर्वपदभूतयोस्नूशची-एतयोरन्त्यस्य पाक्षिकं स्वरितत्वं प्रातिशाख्ये उक्तम्।

"जात्यवद्वा तथावन्तौ तनूशचीति पूर्वयोः" इति।

तथास्वरितार्धस्योदात्तत्वे प्रातिशाख्यमपि--

"एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः।

तस्योदात्ततरोदात्तादर्धमात्राऽर्धमेव वा।।

अनुदात्तः परः शेषः स उदात्तश्रुतिर्न चेत्।

उदात्तं वोच्यते किञ्चित्स्वरितं वाऽक्षरं परम्।।" इति।

अस्यार्थः-- पूर्वयोः= उदात्तत्वानुदात्तत्वयोः, एकत्र समावेशे सति स्वरितो बोध्यः। तस्य= स्वरितस्य, स्वतन्त्रोदात्तापेक्षयोदात्ततराऽर्धमात्रा बोध्येति । "क्व वोऽश्वाः' इत्यादि ह्रस्वाभिप्रायम्। "अर्धं वा" इति दीर्घाभिप्रायम्। अनेनैव ह्रस्वस्यापि सङ्ग्रहाद् व्यापकत्वादिदमेवादर्तव्यमिति सूचयितुमेवकारः। "अनुदात्तः' इत्यादि परिशेषसिद्धार्थकथनम्। सः= शेषः, उदात्तश्रुतिः स्यात्। किमविशेषेण? नेत्याह- नचेदित्यादि। उदात्तस्वरितपरं विहायेत्यर्थः।

शाकल्योऽप्याह--

"अप्राकृतस्तु यः स्वारः स्वरितोदात्तपूर्वगः।

उदादायार्धमस्याथ शिष्टं निघ्नन्ति कम्पितम्"।। इति।

उदादाय- उदात्तं कृत्वा। "अर्धह्रस्वशब्देनार्धमात्रा लक्ष्यते' इति हरदत्तादिग्रन्थास्तु मतान्तरपरतया कथञ्चिन्नेयाः।

**क्वेति।** किमोऽत्, तित् स्वरितम्। **व इति।** "अनुदात्तं सर्वमपादादौ" (पा.सू.8।1।18) इत्यधिकारादनुदात्तम्। **अश्वा इति।** अशेः क्वनि नित्स्वरेणाद्युदात्तम्। संहितायां तु "एकादेश उदात्तेनोदात्तः" (पा.सू.8।2।25) इत्योकार उदात्तः। **ये अरा इति।** द्वयमपि फिट्सूत्रेणान्तोदात्तम्। एकादेशस्तु पक्षे स्वरितः। "स्वरितो वाऽनुदात्ते पदादौ" (पा.सू.8।2।6) इत्युक्तेः।

"मुखं च नासिका च" इति विग्रहे प्राण्यङ्गत्वादेकवद्भावे "मुखनासिकम्' इति स्यादत आह-- **मुखसहितेति।**

**"तुल्यास्य" (पा. सू. १।१।९)** आस्ये भवमास्यं "शरीरावयवाद्यत्" इत्यभिप्रेत्याह-- **ताल्वादीति। आभ्यन्तरेति।** एतच्च प्रशब्दबलाल्लभ्यते। तुल्यास्यं किम् ? तर्प्ता। अत्र पकारस्य तकारे परे "झरो झरि" (पा.सू.8।4।65) इति लोपो मा भूत्। प्रयत्नग्रहणं किम् ? वाक् श्चोतति। शस्य लोपो न।

**ञमङणनानामिति।** "नासिका च' इति चकारेण स्वस्ववर्गानुकूलं ताल्वादि समुच्चीयते। "अनुस्वारोत्तमा अनुनासिकाः" इति तैत्तिरीयाणां प्रातिशाख्यम्। "यमानुस्वारनासिक्यानां नासिका, अनुनासिकाश्चोत्तमाः" इति कात्यायनप्रातिशाख्यम्।"वर्गोत्तमा ञमङणना अनुनासिका भवन्ति, चशब्दात्स्वस्थानाद्यपरित्यागेन नासिकास्थानं द्वितीयमेषामित्यर्थः" इति तद्भाष्यं च।

"एदैतोः" इत्यादौ तपरत्वमसन्देहार्थं, न तु तत्कालग्रहणार्थम्। तेन प्लुतस्यापि संग्रहः।

**पूर्वत्रासिद्धम् (पा. सू. ८।२।१)** यद्ययं स्वतन्त्रो विधिः स्यात्, तर्हि "त्रिपादी पूर्वं प्रत्यसिद्धा' इत्येव लभ्येत, त्रैपादिकम तु पूर्वं प्रति परं नासिद्धं स्यादत आह-- **अधिकारोऽयमिति।** यद्यत्र कार्यासिद्धत्वमिष्येत, तर्हि पूर्वत्रासिद्धमिति "मनोरथः' इत्यादावुत्वं न स्यात्, परत्वात् "रो रि" (8।3।14) इत्यस्य प्रसङ्गात्। तथा च "पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य" इति सिद्धान्तो व्याकुप्येत। अमू, अमी इत्यादि च न सिध्येदत आह-- **त्रिपादीति, परं शास्त्रमिति च**। एतेन त्रिपाद्यां विहितं कार्यमित्यादिः प्राचां ग्रन्थः परास्तः।

**विवृण्वते कण्ठमिति।।** विवार एषां प्रयत्न इति भावः।

**वर्गयमगा इति।।** वर्गगा यमगाश्चेत्यर्थः।

**कादय इति।।** लोकप्रसिद्धपाठापेक्षमिदम्, चतुर्दशसूत्र्यां मावसानत्वायोगात्।

**अर्धविसर्गेति।।** सादृश्यमुच्चारणे लेखने च बोध्यम्।

**ऋलृवर्णयोरिति।।** आ च आ च रलौ, तौ च तौ वर्णौ चेति विग्रहः, उश्च उल् च ऋलोः, तयोःर्वर्णयोरिति वा; प्रथमान्तेन, परिनिष्ठितविभक्त्या वा विग्रह इति सिद्धान्तात्। "ऋत्यकः" (पा.सू.6।1।128) इति प्रकृतिभावः।

**नाऽऽज्झलौ (पा. सू. १।१।१०) आकारसहित इति।।** अत्र च "कालसमयवेलासु"(पा.सू.3।3।167) इत्यादिनिर्देशाः प्रश्लेषे लिङ्गम्। न चैवमपि यिया3सो, इत्यादौ "गुरोरनृत"(पा.सू.8।2।86)इति प्लुतादकारात्परस्य सनः सस्य षत्वं स्यादेवेति वाच्यम्, आश्च आश्चेति द्वन्द्वे सवर्णदीर्घेण दीर्घात्परत्र प्लुतादपि प्रश्लिष्यत इति व्याख्यानात्।

**यणादिकमिति।** शीतलशब्दे सवर्णदीर्घ आदिशब्दार्थः।

**अत्रेति।** अत्रैवेत्यर्थः।

**यद्यपीति।** ग्रहणकशास्त्रस्याद्याप्यनिष्पत्तेरिति भावः।

**"हो ढः" (पा.सू.8।2।31)** इत्युपलक्षणं- रमास्वित्यत्र षत्वं, वागशीरित्यत्र "झयो हः" (पा.सू.8।4।62) इत्याकारस्य घकारः, दासीष्टेत्यादौ "दादेः" (पा.सू.8।2।32) इति घत्वं च नेति बोध्यम्।

यदि तु विवृतमूष्मणामित्यत्र ईषदित्यनुवर्त्य स्वराणां चेत्यत्र निवर्त्य प्रयत्नभेदो व्याख्यायते, तदा "नाज्झलौ"इति सूत्रं मास्त्विति भाष्ये स्थितम्।

**वृद्धिरादैच् (पा. सू. १।१।१)** ऐजिह द्विमात्र एव, तात्परत्वात्। तेन कृष्णैकत्वमित्यत्र त्रिमात्रो न। एवमुत्तरसूत्रेऽपि। तेन गङ्गोदकमित्यादौ त्रिमात्रो न।।

**भूवादयो धातवः (पा. सू. १।३।१)** भूवादयो धातवः।। भूश्च वाश्चेति द्वन्द्वः। आदिशब्दयोर्व्यवस्था-प्रकारवाचिनोरेकशेषः। भूवौ आदी येषामिति बहुव्रीहिः। भूप्रभृतयो वासदृशाः। सादृश्यं च क्रियावाचकेनेत्यभिप्रेत्य आह-- **क्रियावाचिन इति।** क्रियावाचिनः किम् ? "याः पश्यसि' इत्यादौ धातुत्वं मा भूत्। सति हि तस्मिन् "आतो धातोः" (पा.सू.6।4।140) इति स्यात्। भ्वादयः किम् ? हिरुक्, पृथगित्यादीनां, शिश्ये इति भावार्थतिङन्तस्य च मा भूत्। स्तम्भ्वादीनामुदित्करणेन सौत्राणां धातुत्वं ज्ञाप्यते। चुलुम्पादीनां तु "बहुलमेतन्निदर्शनम्" इति गणसूत्रेण संग्रहः।।

**चादयः (पा. सू. १।४।५७)** अद्रव्यार्थाः किम् ? पशुः। लिङ्गसङ्ख्यान्वितं द्रव्यम्। इह तु स्यादेव--लोधं नश्यन्ति पशु मन्यमानाः। "पशु" इति सम्यगर्थे।

**उपसर्गाः (पा. सू. १।४।५९)** निस् दुर् इति सान्तौ, "निसस्तपतौ" (पा.सू.8।3।102) इति निर्देशात् "अयोगवाहानामविशेषेण" इति प्रकरणे निष्कृतं दुष्कृतमित्युदाहृत्य "इदुदुपधस्य सकारस्य यो विसर्जनीयः" इति भाष्यकारोक्तेश्च। "उपसर्गस्यायतौ" (पा.सू.8।2।19) इति सूत्रे वामनोऽप्येवम्। "निरः कुषः" (पा.सू.7।2।46) "सुदुरोरधिकरणे" इति निर्देशाद्रेफान्तावपीति तत्रैव सूत्रे हरदत्तः।।

।। ।। इति श्रीमद्भट्टोजिदीक्षितविरचितायां प्रौढमनोरमायां संज्ञाप्रकरणम्।।

**।। अथ परिभाषाप्रकरणम्।।**

**इको गुणवृद्धीः (पा. सू. १।१।३) गुणवृद्धिशब्दाभ्यामिति।** एतच्च पूर्वसूत्राभ्यां गुणवृद्धिपदे अनुवर्त्य गुणो वृद्धिरिति ये गुणवृद्धी इति योजनया लभ्यते। तेनेह न-- "दिव औत्"(पा.सू.7।1।84) द्यौः, "त्यदादीनामः" (पा.सू.7।2।102) सः, इमम्।

**षष्ठ्यन्तमिति।** सूत्रे षष्ठ्यन्तस्यानुकरणाच्छब्दस्वरूपपरतया नपुंसकात्सोर्लुगिति भावः। **पदमिति।** तच्च सम्भवति सामानाधिकरण्ये इगन्तस्याङ्गस्येत्यादिक्रमेण सम्बध्यते। "मिदेर्गुणः"(पा.सू.7।3।82) "मृजेर्वृद्धिः" (पा.सू.7।2।114)इत्यादौ तु सामानाधिकरण्या-सम्भवान्मिदिमृदज्योरवयवस्येक इति संबध्यते।

यत्तु इक एव स्थाने स्त इति प्राचा व्याख्यातम्, यच्च तट्टीकाकृतोक्तमनियमप्रसङ्गे नियमार्थमिदमित्यादि, तत्सर्वं भाष्यविरोधादुपेक्ष्यम्। तच्छेषपक्षं दूषयित्वा पदोपस्थितिपक्षस्यैव भाष्ये समर्थितत्वादित्याहुः। तच्छेषपक्षेऽपि दूषणोद्धारस्तु शब्दकौस्तुभे स्पष्टीकृतोऽस्माभिः।

**अचां मध्य इति।।** यत्तु प्राचोक्तमन्त्यादचःपर इति। तन्न, "शे मुचादीनाम्"(पा.सू.7।1।59) इत्यादावन्त्यस्याचोऽसम्भवात्। **तस्यैवान्तावयव इति।** तेन त्रपूणीत्यादौ अङ्गस्य नान्तत्वेन दीर्घः सिद्धः। परादित्वे स न सिध्येत्। अभक्तत्वे तु वहंलिह इत्यत्र "वहाभ्रे लिहः"(पा.सू.3।2।32) इति खशि "अरुर्द्विषद"(पा.सू.6।2।32) इति मुमोऽनुस्वारो न स्यात्, अपदान्तत्वात्। यत्तु अभक्तत्वे दीर्घो न स्यादिति, तत् "तदादिग्रहणं स्यादिनुमर्थम्" इत्यङ्गसंज्ञासूत्रस्थवार्तिकेनैव दूषितप्रायम्।

**स्थानेयोगेति।।** स्थानेन योगोऽस्या इति विग्रहः। निपातनादेत्वम्।

**अनेकविधमिति**।स्थानार्थगुणप्रमाणकृतमित्यर्थः। **बलीय इति।** तेन चेता स्तोतेत्यत्र प्रमाणत आन्तर्यवानकारो नेति भावः।

**तस्मिन्निति** सप्तम्यन्तामनुकरणम्। निःशब्दो नैरन्तर्यपरः। दिशिरुच्चारणक्रियः। अचि यणित्युक्ते व्यवहितेऽव्यवहिते च सति प्राप्तमव्यवहिते एवेति, पूर्वस्य परस्य च प्राप्तं पूर्वस्यैवेति च नियम्यते । **अव्यवहितस्येति** तु फलितार्थकथनम्।

**परस्य यदिति।।** "तस्मादित्युत्तरस्यादेः" इति तु न सूत्रितम्। आदेरित्यंशस्य सर्वादेशबाधकत्वापत्तेः। सिद्धान्ते तु परत्वात्सर्वादेशत्वं बाधकमित्यनुपदमेव वक्ष्यति।।

**अनेकाल् शित्सर्वस्य (पा. सू. १।१।५४)** शित उदाहरणम् "इदम इश्" इतः। यत्तु वृत्तिकृता "जश्शसोः शिः"(पा.सू.7।1।20) इत्युदाहृतम्। तन्न, सर्वादेशतायाः प्राक् शित्त्वस्यैवालाभात्। तत्र हि डाणलोरिवानुपूर्व्यादनेनैव सर्वादेशत्वमिति सिद्धान्तः।

**इत्यादाविति।** आदिशब्देन "अतो भिस ऐस्" (पा.सू.7।1।9) इति गृह्यते। **परत्वादिति।** अत एव "आदेः परस्य" (पा.सू.1।1।54)इति पृथक् क्रियते इत्युक्तम्। "उत्तरस्य" इत्यंशस्तु औशैसोरपि प्रवर्तत एव। यत्तु प्राचा "आदेः" इति सूत्रं विवृण्वता पञ्चमीनिर्देशेनेत्यायुक्तं, तदसम्बद्धमिति स्पष्टमेव।

**परनित्येति।** परान्नित्यं यथा-- तुदति,रुणद्धि। परमपि लघूपधगुणं बाधित्वा "रधिजभोः" (पा.सू.7|1|61) इति नुम्। न च सोऽपि शब्दान्तरप्राप्त्याऽनित्य इति वाच्यम्, कृताकृतप्रसङ्गमात्रेणापि क्वचिन्नित्यताभ्युपगमात्। अन्तरङ्गं यथा-- उभये देवमनुष्याः। इह "प्रथमचरम"(पा.सू.1|1|33)इति परमपि विकल्पं बाधित्वा "सर्वादीनि" (पा.सू.1|1|27) इति सर्वनामसंज्ञा विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वात्। अपवादोऽपि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यत एव। तद्यथा-- अयजे इन्द्रं, ग्रामे इह, सर्वे इत्थम्। अत्रान्तरङ्गेण गुणेन सवर्णदीर्घो बाध्यते। स च यद्यपि यण्गुणयोरपवादस्तथापि समानाश्रये चरितार्थः। तथा च वार्तिकम्-- "इण्ङिशीनामाद् गुणः सवर्णदीर्घत्वात्" इति।।

**असिद्धमिति।।** तेन पचावेदमित्यादावेत ऐत्वं न।

**अकृतव्यूहा इति।।** यद्यपि "कृतमपि कार्यं निवर्तयन्ति" परिभाषान्तरं पठ्यते, फलं च तुल्यम्, तथापि "अकृत" इत्येव लघु। "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति न्यायादिति भावः। **न कुर्वन्तीति।** यथा "निषेदुषीम्" इत्यादौ क्वसोरिटमन्तरङ्गत्वात्प्राप्तमपि भाविना सम्प्रसारणेन वलादित्वं नङ्क्ष्यतीत्यालोच्य न कुर्वन्तीत्यर्थः।।

।। इति श्रीमद्भट्टोजिदीक्षितविरचितायां प्रौढमनोरमायां परिभाषाप्रकरणम्।।

**।। अथ अच्सन्धिप्रकरणम्।।**

**इको यणचि (पा. सू. ६।१।७४)** प्रत्याहारेग्रहणेषु तद्वाच्यवाच्ये निरूढा लक्षणा, "दीर्घाज्जसि च"(पा.सू.6-1-105) इति ज्ञापकात् "ल्वादिभ्यः" (पा.सू.8-2-44)इति नर्देशाच्च। तेनेक्शब्देन षट्षष्टिर्गृह्यन्ते, यण्शब्देन सप्त। भाव्यमानत्वेन सवर्णाग्राहकत्वेऽपि गुणानामभेदकत्वेनानुनासिकानामपि यवलानां ग्रहणात्। अतो नास्ति यथासङ्ख्यम्। न च लक्ष्यार्थबोधात्पूर्वभाविनं शक्यार्थबोधमादाय यथासङ्ख्यमस्त्विति वाच्यम्। एवमपि तृतीयचतुर्थाभ्याम् ऋकारलृकाराभ्यां प्रत्येकं त्रिंशदुपस्थितौ लृवर्णानां रेफादेशस्य, ऋवर्णानां लादेशस्य च प्रसङ्गात्। तस्मादिह "स्थानेन्तरतम" (1-1-50) सूत्रेणैवेष्टसिद्धिरित्यभिप्रेत्याह-- **स्थानत आन्तर्यादिति।**

**अनचि च (पा. सू. ८।४।४६) द्वे वेति।।** "यरोऽनुनासिक"(पा.सू.8-4-45) इति सूत्राद् वाग्रहणमनुवर्तते इति "नाज्झलौ"(पा.सू.1-1-10) इति सूत्रे कैयटः। एवं च "सर्वत्र शाकल्यस्य" (पा.सू.8-4-51) इति सूत्रं तत्प्रपञ्चभूतं पूर्वोत्तरसूत्रद्वयं च नारम्भणीयमिति भावः। यत्तु "दीर्घादाचार्याणाम्" (पा.सू.8-4-52) इति सूत्रे आचार्यग्रहणं पूजार्थमित्यभिप्रेत्य वाक्क् इति भाष्योदाहृते विकल्पे उपपत्तिचिन्तार्थं क्लिश्यन्ते, तन्मुधैव; पूजार्थतायाः प्रामाणिकैरनुक्तेः। "त्रिप्रभृतिषु" (पा.सू.8-4-50) इति सूत्रे शाकटायनग्रहणस्यापि तथापत्तेः। न चेष्टापत्तिः, संस्कर्तेति त्रिसकारपरकैयटहरदत्तादिग्रन्थविरोधात् स्वग्रन्थविरोधाच्च। अत एव प्रातिशाख्यभाष्येऽपि "आ त्वा रथम्" इति मन्त्रे तकारस्य द्वित्वविकल्प उदाहृतः। माधवेन चास्ते इत्यत्र सकारस्य द्वित्वविकल्प उक्तः। एवं च धात्रंश इत्यत्र तकारस्य द्वित्वमसदित्युक्तिरेवासतीति दिक्।।

**स्थानिवदादेशः (पा. सू. १।१।५५)** "धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशा" इति प्राचोक्तम्। तत् परिगणनमुदाहरणमात्रं वा ?

नाद्यः। सिच्क्सचङङादीनां श्नादेशस्य शानचश्चासङ्ग्रहापत्तेः।

नान्त्यः। अव्ययस्याङ्गपदाभ्यां पृथग्ग्रहणवैयर्थ्यात्। प्रस्तुत्येति वृत्तिकारोक्तं तदुदाहरणमपि मन्दम्। क्त्वामात्रस्यानव्ययत्वात्, कृत्त्वेन सिद्धत्वाच्चेत्याशयेनाह-- **आदेश इति।**

अनल्विधाविति किम् ? तेन, तस्मात्, तस्य,तांस्मश्च विधौ मा भूत्। तत्र अला विधौ यथा-व्यूढोरस्केन। अत्र सकारस्य स्थानिवत्वेन विसर्गवदट्त्वमाश्रित्य "अड्व्यवाये"(पा.सू.8-4-2) इति णत्वं प्राप्तम्। अलः परस्य-- द्यौः, पन्थाः। हल्ङ्यादिलोपो न। अलो विधौ द्युकामः। वलि लोपो न। अलि विधौ--यजेः क्तः, क इष्टः। "हशि च"(पा.सू.6-1-114) इत्युत्वं न।

अल् चेह स्थान्यवयव एव गृह्यते। तेन रामायेत्यादौ "सुपि च" (पा.सू.7-3-102) इति दीर्घः सिद्धः। तद्विधौ हि यञादित्वमाश्रितं, यञ्चादेशावयवो न तु स्थान्यवयव इति। तदेतत्सकलमभिप्रेत्याह- **न तु स्थान्यलाश्रय इति।** आश्रयणं चेह यथाकथञ्चिन्न तु प्राधान्येनैवेत्याग्रहः। तेन प्रपठ्येत्यत्र वलादिलक्षण इण् न। **तन्निषेधादिति।** स्थानिवत्त्वनिषेधादित्यर्थः।।

**अचः (पा. सू. १।१।५६) अल्विध्यर्थमिति।** तेन वव्रश्चेत्यत्र वस्य सम्प्रसारणं न । उरदत्वस्य स्थानिवत्वेन संप्रसारणतया "न संप्रसारण-" (पा.सू.6-1-37) इति निषेधात्। न चोरदत्वं परनिमित्तं नेति वाच्यम्। अङ्गाक्षिप्ते प्रत्यये परे तद्विधानात्, "प्रागभ्यासविकारेभ्योऽङ्गाधिकारः" इति पक्षं दूषयित्वा "आसपातमसमाप्तेः" इति पक्षस्यैव आकरे सिद्धान्तितत्वात्। किं च पूर्वसूत्रेण स्थानिप्रयुक्तमतिदिश्यते नत्वादेशप्रयुक्तं वार्यते, "नायकः" "पावकः" इत्यादौ "एचोऽयवायावः" (पा.सू.6-1-78) इत्यादीनामप्रवृत्तिप्रसङ्गात्। अनेन तु वार्यते, शब्दाधिकारमाश्रित्य भावाभावयोरुभयोरप्यतिदेशोऽयमिति स्वीकारात्। "न पदान्त" (पा.सू.1-1-58) इति सूत्रे यलोपदीर्घादिग्रहणं चेह लिङ्गम्। अत एव "गणयति" इत्यादौ न वृद्धिः। स्थानिनि सत्यभवन्त्यास्तस्या आदेशेऽप्यभावातिदेशात्। उक्तं च "काममतिदिश्यतां वा सच्चासच्चापि नेह भारोऽस्ति" इति।

स्यादेतत्। पूर्वत्वस्य सावधित्वेन सन्निहितस्यैव अवधित्वमुचितम्। सन्निहितं चेह त्रयम् स्थानी, आदेशो, निमित्तं च। तत्र न तावत् स्थानी अवधिस्तस्यादेशेनापहारात्। नाप्यादेशनिमित्ते, "वैयाकरण" इत्यत्र ऐकारस्यायादेशापत्तेरित्याशङ्क्याह-- **अचः पूर्वत्वेन दृष्टस्येति।** पूर्वत्वमुपलक्षणं न तु विशेषणमति भावः। एतेन "अचः पूर्वत्वविज्ञानादैचोः सिद्धम्" इति वार्तिकं व्याख्यातम्।।

**न पदान्त (पा. सू. १।१।५७) पदस्य चरमावयव इति।** वृक्षं वेतीति वृक्षवीः, वातीति वृक्षवाः, तमाचष्टे वृक्षव्, विच्। इह "लोपो व्योः---" पा.सू.6-1-66) इति वलोपो न, स्थानिवत्त्वात्। न च "न पदान्त--"(पा.सू.1-1-58)इति निषेधः, इह विधेयस्य लोपस्य पदानवयवत्वात्। पदान्तस्य स्थाने विधौ नेति व्याख्यापने तु नेदं सिध्येत्। "सुबन्ताण्णिच्" इति हरदत्तादिमतेऽन्तर्वर्तिसुपा पदत्वात्। न च "इष्ठवत्" इत्यतिदिष्टेन णिचि भत्वेन पदत्वबाधः; णेर्लुप्तत्वात्; न च प्रत्ययलक्षणम्, वर्णाश्रयत्वादिति भावः।

**द्विर्वचनादौ चेति**। यलोपादय आदिशब्दग्राह्याः। "वरे" इति तु वरे योऽजादेशः स न स्थानिवदिति व्याख्येयम्। सहविवक्षाऽभावेऽपि निपातनाद् द्वन्द्वः सप्तम्यलुक् च।

अथोदाहरणानि, पदान्ते-- कानि सन्ति, कौ स्तः। द्विर्वचने-- सुद्ध्युपास्यः। वरे-- यायावरः। "यश्च यङः" इति वरच्, अतो लोपः। स च "आतो लोप इटि च" (पा.सू.6-4-64)इत्यालोपे कर्तव्ये न स्थानिवत्। यलोपे-- यातिः। यातेर्यङन्तात् क्तिच्, अतो लोपः, यलोपः, अल्लोपस्य स्थानिवत्वादातो लोपः, यलोपः। न च पुनरालोपः शङ्क्यः, चिणोलुङ्न्यायेनाऽऽतोलोपस्यासिद्धत्वात्स्थानिवद्भावाच्च। स्वरे-- चिकीर्षकः। सनोऽतो लोपो "लिति"(पा.सू.6-1-193) इतिककारेकारस्य उदात्तत्वे कर्तव्ये न स्थानिवत्। सवर्णानुस्वारयोः-- शिण्ढि। दीर्घे-- प्रतिदीव्ना। जशि-- सग्धिश्च मे। अदनं ग्धिः। अदेः क्तिनि "बहुलं छन्दसि" (पा.सू.2-4-39) इति घस्लादेशः, "घसिभसोर्हलि-" (पा.सू.6-4-100) इत्युपधालोपः, "झलो झलि"(पा.सू8-2-26) इति सलोपः, घत्वम्, घस्य जश्त्वम्। "सहस्य सः"(पा.सू.6-3-78) इति सूत्रात् स इत्यनुवर्तमाने "समानस्यच्छन्दस्यमूर्धप्रभृत्युदर्केषु"इति सूत्रेण सः। चरि-- जक्षतुः।।

**संयोगान्तस्य (पा. सू. ८।२।२३) तदन्तस्येति।** अलोऽन्त्यपरिभाषयेति भावः। यद्यपि विशेषणेन तदन्तविधिलाभात् संयोगस्येत्येव सूत्रयितुमुचितं तथापि प्रत्येकं संयोगसंज्ञेति पक्षे दृषत्करोतीत्यादौ लोपं वारयितुं संयोगावन्तौ यस्येति द्विवचनान्तेन समासलाभार्थमन्तग्रहणम्। वृत्तौ हि उपसर्जनानामेकत्वसंख्यौत्सर्गिकी द्वित्वादिकं तु प्रयत्नलभ्यमिति भाष्ये स्थितम्।।

**"यण--"** इति वाचनिकम्। यद्वा वाच्यो व्याख्येयः। व्याख्या च द्वेधा-- "झलो झलि" (पा.सू.8-2-26) इत्यतो झल्ग्रहणमपकृष्य झल एव लोपो विधीयते इति, अन्तरङ्गे लोपे कर्तव्ये बहिरङ्गस्य यणोऽसिद्धत्वमिति वा। न च षाष्ठी असिद्धपरिभाषा त्रिपादीस्थत्वेनासिद्धमन्तरङ्गं लोपं न पश्यतीति वाच्यम्। कार्यकालपक्षाभ्युपगमात्। न च "नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः" इति निषेधः। तस्यानित्यत्वात्, उत्तरकालप्रवृत्ते लोपे अजानन्तर्याभावाच्च। तथा च वार्तिकम्--"संयोगान्तस्य लोपे यणः प्रतिषेधः","न वा झलो लोपाद्", "बहिरङ्गलक्षणाद्वा" इति। इह यथोद्देशपक्षे आद्यं वार्तिकद्वयम्, तृतीयं तु कार्यकालपक्षे इति विवेकः। यत्त्वाहुः-- वार्तिककृतो वचनं, प्रत्याख्यानप्रकारद्वयं तु भाष्यकृत इति। तन्निर्मूलम्, मतभेदे प्रमाणाभावात्। यदप्याहुः--काव्यं, कलत्रं, शाल्वं चाचक्षाणः काव्, कलत्, शाल्; अदभ्रयतेरघब् इति, तदपि न, पक्षत्रयेऽपि संयोगान्तलोपस्य दुर्लभत्वात्। आद्यपक्षस्यैकरूप्यार्थं पूर्वं पूर्वमन्तरङ्गं परं परं बहिरङ्गमित्यल्लोपणिलोपयोरसिद्धत्वस्य सुवचत्वात्। अत एव कातन्त्रपरिशिष्टे शुक्लयतेः क्विपि शुक्ल् इत्युदाहृतम्। वान्तयोः क्विपि ऊठो दुर्वारत्वात्। न च स्थानिवत्वम्, क्वौ विधिं प्रति तन्निषेधात्; विचि "लोपो व्योः--"(पा.सू.6-1-66)इति लोपस्य प्रसङ्गाच्च। गिरिवेश्मयतेस्तु क्विपि यणः प्रतिषेधार्थं वचनारम्भपक्षे गिरिवेडित्युचितम्। प्रत्याख्यानपक्षे तु मान्तमेवेति दिक्।

**इति पक्ष इति।।** पक्षद्वयस्यापि भाष्ये स्थितत्वादिति भावः।

**चत्वारि रूपाणीति।** यत्तु वदन्ति-- धकारयकारोभयद्वित्वे उभयोः पुनर्द्वित्वे लोपविकल्पेऽन्यतरद्वित्वे च नव रूपाणि। तथा हि-- एकधं त्रिधा-- एकयं द्वियं त्रियं च। एवं द्विधं त्रिधं च त्रिधेति। न चान्तरङ्गे द्वित्वे बहिरङ्गस्य यणोऽसिद्धत्वम्, त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषा न प्रवर्तत इति विसर्जनीयसूत्रे भाष्यकैयटयोर्व्यवस्थापितत्वादिति।

अत्रेदं वक्तव्यम्-- पुनर्द्वित्वमशुध्दम्, एकस्यां व्यक्तौ एकं लक्षणं सकृदेव प्रवर्तते इति "एकः पूर्वपरयोः" (पा.सू.6-1-84) इति सूत्रे भाष्ये सिद्धान्तितत्वात्। अन्यथा द्वित्वानामनन्त्यापत्तेः। न च "झरो झरि" (पा.सू.8-4-65) इति "हलो यमाम्--"(पा.सू.8-4-64) इति च लोपेन निर्वाहः, लोपस्य वैकल्पिकत्वात्। कथमन्यथा त्रिधं त्रियं चेति भवदुक्तिः सङ्गच्छेत। किं चैवं सति "सर्वस्य द्वे" पा.सू.(8-1-1)इति पुनः पुनः प्रवर्तेत। अत एव "लिटि धातोः"(पा.सू.6-1-8)इति सूत्रेऽभ्यासग्रहणं भाष्ये प्रत्याख्यातम्। सन्नन्ताद्यङन्ताद्वा णिचि चङि द्वित्वाभावार्थं तदिति तु कैयटादिभिरुक्तम्। तस्मादिह त्यज वा पञ्चमादीनि रूपाणि स्वीकुरु वा रूपानन्त्यमिति नवत्वोक्तिरसङ्गतैव। सकारद्वित्वेनाष्टौ, विसर्गद्वित्वेन षोडशेति त्वन्यदेतत्।

यदप्युक्तं त्रैपादिकेऽन्तरङ्गे इत्यादि, तदपि न, "नार्कुट" "नार्पत्यः" इत्यत्र विसर्गवारणाय वृद्धेरसिद्धत्वस्य तत्रैव भाष्ये स्पष्टत्वात्। "संयोगान्तलोपे यणः प्रतिषेधः" इत्यस्य बहिरङ्गत्वेन प्रत्याख्यातत्वात्। स्वयमपि तथैवानूदितत्वाच्च। तस्मादिह यथोद्देशपक्षो ग्राह्यो बहिरङ्गपरिभाषाया अप्रवृत्तये। तथा च भाष्ये मयः परस्य यणो द्वित्वे "दध्य्यत्र" इत्युदाहृतम्। न चैवमपि "इकोऽसवर्णे--" (पा.सू.6-1-127) इति शाकलेन रूपान्तरनस्त्विति वाच्यम्। समासे तन्निषेधात्। न च नित्यसमास एव तन्निषेध इति वाच्यम्। भाष्ये नित्यग्रहणस्य प्रत्याख्याततत्वात्। यथोत्तरं मुनीनां प्रामाण्यात्।

नन्विह यणेव दुर्लभः, सुधीशब्दस्य ध्यायतेः सम्प्रसारणेन निष्पन्नत्वेन "सम्प्रसारणाच्च"(पा.सू.6-1-108) इति पूर्वरूपापत्तेः; इति चेत् ? न, "सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणम्" इति वार्तिकोक्तेः, सम्प्रसारणस्थानिकस्यातथात्वाच्च। न चैवमपि "नभूसुधियोः"(पा.सू.6-4-85) इति यण्निषेधः शङ्क्यः, आङ्गत्वेन प्रत्यये परत एव तस्य प्रवृत्तेः, अनन्तरस्येति न्यायेन "एरनेकाचः--'(पा.सू.6-4-82) इति "ओस्सुपि" (पा.सू.6-

4-83) इति च सूत्रद्वयेन प्राप्तस्यैव निषेधाच्च।

**धात्रंश इति।** अत्र रेफस्य द्वित्वं न । द्वित्वप्रकरणे रहाभ्यामिति साक्षाच्छ्रुतेन निमित्तभावेन रेफस्य कार्यित्वबाधात्। सुध्युपास्य इत्यादौ तु स्थानित्वेन निमित्तत्वमिकः "तस्मादित्युत्तरस्य"(पा.सू.1-1-67) इत्यादिनिर्देशाज्ज्ञापकान्न बाध्यत इति कैयटः। तकारस्य तु भवत्येवेत्युक्तम्, तच्च वा; इत्यतोऽत्र रूपद्वयम्। लाकृतिरिति त्वेकमेव।

**हलो यमाम् (पा. सू. ८।४।६३) लोपः स्याद्वेति।** "झयो हः--"(पा.सू.8-4-62) इत्यतोऽन्यतरस्यामित्यनुवृत्तेः। एतच्च लण्सूत्रे भाष्ये स्पष्टम्।

**माहात्म्यमिति।** अत्र मलोपो नेत्यर्थः। "हलो यरां यरि सवर्णे लोपः" इति तु न सूत्रितम्। आर्ध्नोत्, मूर्ध्नः, शार्ङ्गम्, आर्त्री इत्यादौ रेफात्परस्य लोपापत्तेः।।हलो यमाम्।। लोपः स्याद्वेति। "झयो हः--"(पा.सू.8-4-62) इत्यतोऽन्यतरस्यामित्यनुवृत्तेः। एतच्च लण्सूत्रे भाष्ये स्पष्टम्। माहात्म्यमिति। अत्र मलोपो नेत्यर्थः। "हलो यरां यरि सवर्णे लोपः" इति तु न सूत्रितम्। आर्ध्नोत्, मूर्ध्नः, शाङ्र्गम्, आर्त्रीः इत्यादौ रेफात्परस्य लोपापत्तेः।।

**वान्तो यि (पा. सू. ६।१।७६) यकारादाविति**। विशेषणमात्मान्तस्य सञ्ज्ञा स्यादित्येतदर्थकस्य "येन विधिः"(पा.सू(1-1-72)इति सूत्रस्यापवादभूतेन "यस्मिन्विधिस्तदादावल्ग्रहणे" इति वार्तिकेनायमर्थो लभ्यते।

**ओदौतोरिति।** पूर्वसूत्रे तयोरेव वान्तौ प्रति स्थानित्वेन निर्णीतत्वादित्यर्थः।

ननु गव्यूतिरित्यत्र "हलि सर्वेषाम्"(पा.सू.8-3-22) इति, "लोपः शाकल्यस्य"(पा.सू.8-3-19) इति वा लोपः स्यादित्याशङ्क्याह--**वान्त इति।**

**लव्यमिति।** लुनातेरचो यत्। "सार्वधातुकार्धधातुकयोः"(पा.सू.7-3-84) इति गुणः। **अवश्यलाव्यमिति।** "ओरावश्यके"(पा.सू.3-1-125) इति ण्यत्।।

**क्षय्यमिति।** "शकि लिङ् च" (पा.सू.3-3-172) इति चात्कृत्याः। **क्षेयमिति।** "अर्हे कृत्यतृचश्च" (पा.सू.3-3-169) इति यत्।

**हर एहीति।** इह "ओमाङोश्च"(पा.सू.6-1-95)इति पररूपं प्राप्तम्।।

**उरण् रपरः (पा. सू. १।१।५०) आन्तरतम्यादिति।** रेफशिरस्कस्यार् इत्यस्य रेफद्वारा ऋकारेण स्थानसाम्यादित्यर्थः।

**पक्षे द्वित्वमिति।** ऋधेर्धस्येति भावः।।

**लोपो वेति।** "झयो होन्यतरस्याम्" (पा.सू.8-4-62) इति सूत्राद्विकल्पानुवृत्तेः। एतच्च "नाज्झलौ"(पा.सू.1-1-10) इति सूत्रे भाष्यकैयटयोः स्पष्टम्। प्राचस्तु विकल्पानुवृत्तेरनुक्तेर्न्यूनता। यदपि व्याख्यातृभिः "शरोऽचि'(पा.सू.8-4-49) इति ज्ञापकमभिप्रेत्य तत्संवादार्थं भाष्यमुपन्यस्तम्-- "अनुवर्तते विभाषा शरोऽचि यद्वारयत्ययं द्वित्वम्" इति, तन्न, तदुत्तरभाष्ये एव उक्तज्ञापकस्य दूषितत्वात्। लोपस्य हि नित्यत्वे "अचो रहाभ्याम्--"(पा.सू.8-4-46) इति द्वित्वं लोपापवादः स्यात्। तथा च "शरोऽचि" इत्यस्य सार्थक्यं स्पष्टमेव। तस्माद्विकल्पानुवृत्तौ ज्ञापकान्तरमनुसर्तव्यम्, भाष्यकारादिव्याख्यानमेव वा शरणम्।

**द्वित्वलोपयोरिति।** यत्तु द्वित्वविधानसामर्थ्याद् द्वावेव शिष्येते इति, तन्न, लोपस्य वैकल्पिकत्वेन द्वित्वस्य पक्षे चरितार्थत्वात्।

**त्रिधमिति।** "यणो मय" लक्षणान्तरेण पुनर्द्वित्वे तु चतुर्धमपि बोध्यम् ।।

**एत्येधत्यूठ्सु (पा. सू. ६।१।८६)** अत्र एचीत्यनुवर्तते। तच्च एतेरेव विशेषणं नत्वेधतेः, अव्यभिचारात्। नाप्यूठः, असम्भवादिति प्राञ्चः।

अत्र कैयटः-- एधतेरपि विशेषणम्। मा भवान्प्रेदिधदित्यत्र व्यभिचारात्। यद्यपीदं कैयटपुस्तकेषु प्रायेण न दृश्यते, तथापि क्वचिद् दृश्यत एव। न च "णौ चङि--'(पा.सू.7-4-11) इति ह्रस्वे कृते नायमेधतिरिति वाच्यम्। एकदेशविकृतस्यानन्यत्वात्। न चैवमपि "अजादेर्द्वितीयस्य"(पा,.सू.6-1-2) इति धिशब्दस्थाने धिधिशब्दादेशे सति वस्नसोरिव प्रकृतिप्रत्ययविभागसम्मोह इति वाच्यम्। द्विःप्रयोगो द्विर्वचनं षाष्ठमिति षाष्ठभाष्ये सिद्धान्तितत्वात्। अन्यथैहैव णिलोपो न स्यात्। जिघांसतीत्यादौ सनः सकारेण विशिष्टस्य द्वित्वे कृते ह्रस्वो न भवत्येवेति वाच्यम्। ओणेर्ऋदित्करणेन बहिरङ्गस्यापि "णौ चङि--"(पा.सू.7-4-1) इति ह्रस्वस्य प्रथमं प्रवृत्तिरिति ज्ञापितत्वात्।

अत्र माधवः-- मा भवान्प्रेदिधदित्यत्र नातिप्रसङ्गः। ण्यन्तस्य शब्दान्तरत्वादेधतिग्रहणेनाग्रहणात्। अत एव हि "न भाभूपूकमिगमि--" (पा.सू.8-4-34) इत्यत्र " ण्यन्तानां च भादीनामुपसंख्यानम्" इत्युक्तम्।

तत्रैव शब्दान्तरत्वादप्राप्तावुपसंख्यानमिति कैयटन्यासकारहरदत्तादिभिः सर्वैरेवोक्तम्। किं च ण्यधिकस्यापि ग्रहणे "उपसर्गात्सुनोति--" (पा.सू.6-1-91) इत्यत्राभिषावयतीत्युदाहृत्य ण्यन्तेनाभेर्योगात्सुनोतिं प्रत्यनुपसर्गत्वात्कथं षत्वमित्याशङ्क्याभेः प्रकृत्यर्थविशेषकत्वेन समाधानं भाष्यकाराद्युक्तमसङ्गतं स्यात्। न च "हेरचङि"(पा.सू.7-3-56)इति लिङ्गात् "प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्" इति भ्रमितव्यम्।

ज्ञापकस्य कुत्वमात्रविषयकत्वात्। तथा च वार्तिकम्--"हेश्वङि प्रतिषेधानर्थक्यमङ्गान्यत्वात्। ज्ञापकं तु चङोऽन्यत्र ण्यन्तेऽपि कुत्वभावस्य" इति। तस्मायुक्तिविरोधाद्भाष्यवार्तिकवृत्तिन्यासादिग्रन्थैः पूर्वापरस्वग्रन्थेन च विरोधादुपेक्ष्योऽयं कैयट इति।

अत्रेदं वक्तव्यम्। अस्तु विशिष्टस्य शब्दान्तरत्वं तावताऽपि प्रकृतिभागस्यैध्रूपत्वं केनापगतमित्यवधार्यताम्। न ह्युपैधत इत्यादौ तिङन्तस्यैध्रूपता नास्तीति प्रकृत्यंशे सा हीयते। तथा च "उपसर्गात्सुनोति--"इति सूत्रे वार्तिकम्--"सिद्धं त्ववयवान्यत्वात्"इति।

यत्त्वभिषावयतीत्यत्रत्यभाष्यविरोधोद्भावनं, तद्विपरीतम्। यतः प्रकृतेः सुनोतिरूपानपायात् कैयटमते सिद्धा यथोक्तव्यवस्था। त्वन्मते तु रूपान्तरत्वेन ण्यधिकस्याग्रहणादसङ्गतैव प्रागुक्तव्यवस्था स्यात्। को ह्येधयतिसावयत्योर्विशेषः--यदेधतेर्ण्यधिकस्याग्रहणं सुनोतेस्तु ग्रहणमिति। यदपि ण्यन्तभादीनामुपसंख्यानमुपन्यस्तं तदपि नास्माकं प्रतिकूलम्, विशिष्टस्य शब्दान्तरत्वेन प्रकृत्यंशस्य तु णिचा व्यवधानेनोपसंख्यानस्यावश्यकत्वात्। अत एव न तत्रत्यन्यासादिभिः स्वोक्त्या वा विरोधः। प्रत्युत तवैव विरोधः, षाष्ठे भाष्यवार्तिकयोः "एत्येधत्योः--"(पा.सू.6-1-89) इति योगं विभज्य "एचि" इति विशेषितत्वात्। तस्मादिह वृत्तिग्रन्थो माधवग्रन्थश्चासङ्गत एवाभिप्रेत्य व्याचष्टे--**एजाद्योरिति।।**

**अक्षौहिणीति।** ऊहोस्त्यस्य ऊहिनी अक्षाणामूहिनीति विग्रहः। परिमाणविशेषविशिष्टा सेना अक्षौहिणी। "पूर्वपदात्संज्ञायाम्"(पा.सू.8-4-3) इति णत्वम्। यत्तु प्राचा विगृहीतमक्षाणामूहः समूहः सोऽस्त्यस्या इति। तदपि उहिनीशब्देन षष्ठीतत्पुरुष इत्येवंपरतयैव कथञ्चिन्नेयम्। ऊहशब्देन समासे तत इनौ तु वृध्दिर्न स्यात्, अन्तरङ्गेण गुणेन बाधात्। अपवादभूताया अपि वृद्धेरूहिनीशब्देन विग्रहे चरितार्थत्वात्। यथोक्तं प्राक्-- "इण्-ङि-शीनामाद् गुणः सवर्णदीर्घत्वात्" इति।

**स्वादीरेरिणोः ।।** इरेरिण्योरिति क्वाचित्कोऽपपाठः। स्वैरीति णिन्यन्तस्यास्त्रियां वृद्ध्यभावप्रसङ्गात्।स्वैरिणीत्यत्र तु ङीपः प्राग्भागमादाय वृद्धिर्बोध्या। यत्तु व्याचख्युः लिङ्गविशिष्टपरिभाषयेति तन्निष्फलम्।।

**"प्रादूहोढोढ्येषैष्येषु"।।** अत्रोहशब्दः कैश्चित्प्रक्षिप्तो भाष्यादौ तु न दृश्यते इति प्राञ्चः। इदानीन्तनपुस्तकेषु तु भाष्यवार्तिकयोरूहशब्दो दृश्यत एव।

**नानर्थकस्येति।** उपस्थितस्यार्थस्य शब्दं प्रति विशेषणत्वसंभवे त्यागायोगादिति भावः। सीरदेवस्त्वाह- "व्रश्च" (पा. सू. 8.2.36) इति सूत्रे राजेः पृथग् भ्राजिग्रहणमिह ज्ञापकमिति। नन्वेतदयुक्तम्, फणादिना राजिना साहचर्यात् तथाभूतस्यैव षत्वार्थतया भ्राजिग्रहणस्योपक्षीणत्वादिति चेत्, विभ्राट्, विभ्रागिति रूपद्वयं हि साध्यं, तच्च व्रश्चादिसूत्रे "राजृ" इति पठित्वाऽपि साध्यम्, एकस्य भ्राजतेर्ऋकारस्य प्रागपि दातुं शक्यत्वात्- ऋभ्राज इति, भ्राजभास (पा. सू. 7.4.3) इति विकल्पस्य वाचनिकतया ऋकारस्य आत्मनेपदमात्रफलकतया वक्ष्यमाणत्वेन तत्स्थानेऽकारस्य सुपठत्वाच्च। तस्मात् सीरदेवोक्तं ज्ञापकमपि सम्यगेव।

**प्रैष्य इति।** एषसाहचर्यादेष्योऽपि अनव्ययं गृह्यते। तेन ण्यन्तादिषेः क्त्वो ल्यपि पररूपमेव, न तु वृद्धिः। प्रेष्य गतः।

**प्रवत्सतरेति।** अत्र कालापानुसारिणो वत्सरशब्दमपि पठित्वा वत्सरे देयमृणं वत्सरार्णमित्युदाहरन्ति। अपरे तु वत्सशब्दमपि पठन्ति, तत्सर्वं भाष्यादिविरुद्धम्।।

**अन्तादिवच्च (पा. सू. 6.1.6)।।** इहैकः पूर्वपरयोरित्यनुवर्तते यथासंख्यं चेत्यभिप्रेत्याह- **पूर्वस्यान्तवदिति।** स्थानिवत्सूत्रेणैव गतार्थमिदं सूत्रम्। न चाल्विध्यर्थमिदमिति भ्रमितव्यम्, अस्याप्यनल्विधावनिष्टत्वात्। अन्यथा अयजे इन्द्रमित्यत्र सवर्णदीर्घापत्तेः। तथा च वार्तिकम्- "न वा अताद्रूप्यातिदेशात्" इति।

**न विसर्ग इति।** एतच्च "सुखार्तः" इत्यादावपि तुल्यम्। अत्र च कार्यकालपक्षे बहिरङ्गत्वादसिद्धत्वमपि बोध्यम्। न च "नाजानन्तर्य-" इति निषेधः, यत्रान्तरङ्गे, बहिरङ्गे वा अचोरानन्तर्यं तत्रेति हरदत्तपक्षे तत्प्राप्तावपि यत्र पश्चात् प्रवर्तमानेऽजानान्तर्यमिति कैयटमते निषेधाप्राप्तेः। बह्वपेक्षत्वेन बहिरङ्गायां वृद्धावजानन्तर्यसत्त्वेऽपि पश्चात् प्रवर्तमाने तदभावात्।

**उपसर्गेणेति।** यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञा इत्युक्तत्वादिति भावः।

**प्रार्षभीयतीति।** "शरोऽचि" (पा. सू. 8.4.49) इति द्वित्वनिषेधः। **प्रेजते इति।** एजृ दीप्तौ। कम्पनार्थस्तु परस्मैपदी। एजते कम्पते इति तु प्राचां व्याख्यानं प्रामादिकमेव।

एङ्येङित्येव सिद्धे परग्रहणमुत्तरार्थं रूपग्रहणं तु चिन्त्यप्रयोजनम्, "एङि परः" इत्येव सिद्धेः। यथा "अमि पूर्वः" (पा. सू. 6.1.107) इति।

**नियोगोऽवधारणमिति।** यदाहुः-

"अनवक्लृप्तौ यदा दृष्टः पररूपस्य गोचरः।

एवस्तु विषयो वृद्धेर्नियमेऽयं यदा भवेत्"।। इति।

एतेन "नियोजनं नियोगो व्यापारः" इति व्याख्यानं परास्तम्, "यदैव पूर्वं ज्वलने शरीरं" "ममैव जन्मान्तरपातकानाम्" इत्यादिप्रयोगविरोधात्, उदाहृतवृत्तिस्थश्लोकविरोधात्, "लङः शाकटायनस्यैव" (पा. सू. 3.4.111) "तपस्तपःकर्मकस्यैव" (पा. सू. 3.1.88) इत्यादिसौत्रप्रयोगविरोधाच्च। यत्तु श्लोकवार्तिकमिदमित्याहुः, तद्रभसात्।

**शकन्ध्वादिष्विति।** शकन्ध्वादिविषये तत्सिद्ध्यनुगुणं पररूपं वाच्यमित्यर्थः। अत एवाह- **तच्च टेरिति।** यदि तु "आत्" इत्यधिकारादकारस्यैवेष्येत तर्हि मनीषा इति न सिद्ध्येत। केचित्तु मनःपतच्छब्दयोः पृषोदरादित्वादन्त्यलोपेऽकारस्यैव पररूपमाहुः। शकानां= देशविशेषाणामन्धुः = कूपः=शकन्धुः। कर्कोणां राज्ञामन्धुः। बदरीवाची तु कर्कन्धूशब्दो दीर्घान्तः, "अन्धूदृम्भू-" इत्यादिना उणादिषु वक्ष्यते। अटतीत्यटा पचाद्यच्। कुलस्य अटा कुलटा। ईष उञ्छे, ईष गत्यादिषु, आभ्यां "गरोश्च हलः" (पा. सू. 3.3.103) इत्यप्रत्यये ईषा। मनस ईषा **मनीषा**। हलस्य ईषा **हलीषा**= लाङ्गलदण्डः, मूर्द्धन्योपधः। यस्तु-

"प्रभुशङ्करयोरीशः स्त्रियां लाङ्गलदण्डके।।"

इति रभसकेशात् तालव्योपधस्तस्मिन् परे "आद् गुणः (पा. सू. 6.1.87) इत्येव भवति, हलेशा। पतन्नञ्जलिर्यस्मन् नमस्कार्यत्वादिति **पतञ्जलिः। मार्तण्डः।** केचिदत्र सवर्णदीर्घमाहुः। परा मार्ताण्डमास्थत्, पुनर्मार्ताण्डमारभत्, विश्वो मार्ताण्डोऽव्रजदित्यादि-वैदिकप्रयोगास्तेषामनुकूलाः।

**ओत्वोष्ठयोरिति।** अकारस्य ओत्वोष्ठयोश्चैकत्र समासे स्थितौ सत्यामिदं प्रवर्तते, तेनेह न, वृषलसुतौष्ठव्रणस्ते इति।

अव्यक्तशब्दं व्याचष्टे- **ध्वनेरिति। अनुकरणस्येति।** परिस्फुटाकारादिवर्णस्येति भावः। तस्य चानुकरणत्वं किञ्चित्साम्येन बोध्यम्। यत्तु प्राचोक्तम्- अतः किम्? दकारान्ते मा भूदिति। यच्च व्याख्यातं दकारान्त इति रूपान्तरोपलक्षणं वटक्, मरुत् इत्यादेरपीति, तन्निःसारम्, प्रश्नस्य, दान्त इत्युत्तरस्य च निरालम्बनत्वात्। यत्तु व्याचख्युः- "अतो गुणे" (पा. सू. 6.1.97) इत्यतोऽत इत्यनुवर्त्य शब्दाधिकाराश्रयणात् सिद्धमिति प्रश्नः। यदा जश्त्ववशाद् दान्तत्वं तदापि स्यात् पुनरद्ग्रहणे तु श्रौततान्तत्वस्य विवक्षणान्नेत्युत्तरमिति, तच्चिन्त्यम्, जश्त्वशास्त्रस्यासिद्धत्वेन पररूपस्यैव प्रवृत्तेः, "नाम्रेडितस्य" (पा. सू. 6.1.99) इति निषेधे पटत्पटदितीत्युदाहरणस्यासंबद्धत्वापत्तेश्च। तत्र हि भवदुक्तरीत्या प्राप्तिरेव नास्ति, दान्तत्वात्। एतेनानुकार्यानुकरणयोरभेदविवक्षया विभक्त्यभावेन गवित्ययमाहेतिवदपदत्वात् पटत् इतीत्यत्र जश्त्वं नेति ग्रन्थोऽपि प्रत्युक्तः, उत्तरग्रन्थविरोधात्, जश्त्वस्यासिद्धतया पररूपैणैव बाधाच्च। ननु तदपि नित्यं तथा च कथं पररूपविरहेण प्रयोग इति चेन्न, अलौकिकं प्रक्रियावाक्यमिदमिति स्वयमेव व्याख्यातत्वात्, संहिताया अविवक्षायां तत्सम्भवाच्चेति दिक्।

**अकः सवर्णे (पा. सू. ६।१।९७) अचि पर इति**। यदा तूष्मणामीषद्विवृतत्वमाश्रित्य "नाज्झलौ"( पा.सू.1-1-10) इति सूत्रं प्रत्याख्यायते तदा इहाचीति नानुवर्तनीयम्। अकोऽकि दीर्घ इति सुवचम्। **वर्णद्वयं द्विमात्रमिति।** यत्तु प्राचा व्याख्यातं दीर्घे प्राप्ते ह्रस्व ॠकार लृकारश्च विधीयत इति तद्भाष्यकैयटादिविरोधादुपेक्ष्यम्।।

**एङः पदान्तात् (पा. सू. ६।१।१०५)** "ङसिङसोश्च" (पा.सू.6-1-110) इत्यस्यारम्भादस्य पदान्तविषयत्वे लब्धे उत्तरार्थं पदान्तादिति स्पष्टार्थमिहैव कृतम्।।

**सर्वत्र विभाषा गोः (६।१।११८)** यद्यपि छन्दसीति न प्रकृतं तथापि "यजुष्युरः"(पा.सू.6-1-117) इत्यादिप्रक्रमाच्छन्दस्येवेदमिति सम्भाव्येत, अतः सर्वत्रेत्युक्तम्। तद्व्याचष्टे- **लोके वेदे चेति।** इह "एङः" इत्यनुवर्त्यैङन्तस्य गोरिति व्याख्येयम्। तेनेह न--चित्रग्वग्रमिति। प्रतिपदोक्तस्य एङो ग्रहणान्नेह-- हे चित्रगोऽग्रम्। **प्रकृतिभाव इति।** "प्रकृत्यान्तः पादम्"(पा.सू.6-1-115) इति सूत्रात्प्रकृत्येत्यनुवृत्तेः। यद्यपि भाष्ये "इको गुणवृध्दी" (पा.सू.1-1-3)इति सूत्रे "नान्तः पदम्" इति पाठः स्थितः। षाष्ठभाष्येऽप्येवम्। तथापि शाकलसूत्रे "ह्रस्वश्च इति चकारेण प्रकृत्या इत्यनुकृष्यते" इति भाष्यदर्शनात् "प्रकृत्यान्तः पादम्" इति पाठोऽपि साधुरेव। "न" इति पाठे तु " सर्वत्र" इति सूत्रेण पूर्वरूपमेव विकल्प्येतेत्यवधेयम्।

**अवङ् स्फोटायनस्य (पा. सू. ६।१।११९)**अत्राप्येङन्तस्य गोरिति व्याख्येयम्। अगिति सूत्रयितुमुचितम्। विभाषानुवृत्तेः स्फोटायनग्रहणं पूजार्थम्। **गवीति।** यत्तु प्राचा गवे इति प्रत्युदाहृतम्। तन्न। सत्यप्यवङि- "अतो गुणे"(पा.सू.6-1-77)इति पररूपेण रूपसिद्धेः। न च सत्यवङि ङेर्यादेशः स्यात्, स्त्रियां तु टाप् स्यादिति वाच्यम्। सन्निपातरिभाषया यादेशटापोः सुसमाधानत्वात्। न च साऽनित्येति वाच्यम्, तावताप्यौत्सर्गिकतत्प्रवृत्येष्टसिद्धेः। **गवाक्ष इति।** गवामक्षीवेति विग्रहः। "अक्ष्णोऽदर्शनात्" इत्यच् समासान्तः। वातायने रूढोऽयम्। पुंस्त्वं लोकात्।।

**इन्द्रे च (पा. सू. ६।१।१२०)** आरम्भसामर्थ्यान्नित्यमिदम्। "इन्द्रे च नित्यम्" इति पाठस्तु भाष्यासमतत्वादुपेक्षितः।।

**एहि कृष्णेति।** "दूराद्धूते च" (पा.सू.8-2-84) इति प्लुतः। यत्तु कृष्णा3 एहीति प्राचोक्तं, तन्न, "दूराद्धूते च"(पा.सू.8-2-84) इत्यादौ "वाक्यस्य टेः--" (पा.सू.8-2-82) इत्यधिकारात्।

**चक्र्यत्रेति।** इह "स्कोः--"(पा.सू.8-2-29) इति कलोपो न। यणः कार्यकालपक्षे बहिरङ्गपरिभाषयाऽसिद्धत्वात्, स्थानिवद्भावाच्च। "पूर्वत्रासिद्धीये न--" इति तु नास्ति, "तस्य दोषः संयोगादिलोप--" इत्याद्युक्तेः।।

**गुरोरनृतः (पा. सू. ८।२।८६)** अपिशब्दो गुरोरगुरोश्च टेः प्लुतार्थः। **देवदत्तेति।** अस्यैहीत्यादिः। एवमग्रेऽपि।

**सर्वः प्लुत इति।** तथा च "अग्नीत्प्रेषणे परस्य च" इति सूत्रे भाष्यम् " सर्वः प्लुतः साहसमनिच्छताऽपि विभाषा कर्तव्यः" इति। साहसं शास्त्रत्यागः, तदनिच्छताऽपि--शास्त्रमनुरुन्धानेनापीत्यर्थ इति हरदत्तः। वैकल्पिकेष्वनुष्ठानक्लेशं धर्माधिक्यफलकमप्यशक्यत्वादनिच्छतेत्यर्थ इत्यन्ये । एतेन "द्वैपायनो विरहकातर आजुहाव पुत्रेति" भागवतं व्याख्यातम्। प्लुतस्य वैकल्पिकत्वात्। किं चेह पुत्रशब्दस्य वाक्यान्तत्वं नास्तीत्यपि सुवचम्, आख्यातप्राग्वर्तिनोऽप्यनुकरणसम्भवात्। अपि च अस्तु प्लुतः, प्रकृतिभावस्तु वैरल्पिकत्वान्मास्तु। तथा च "ई चाक्रवर्मणस्य" इति सूत्रे भाष्यम्--"ईग्रहणेन नार्थः वशा इयं वशेयमिति"। प्लुतप्रकृतिभावः सर्वोऽपि दुर्लभ एव, "अप्लुतवदुपस्थिते" इति सूत्रात्। उपस्थितं नामावैदिक इतिशब्दस्तस्मिन्परे प्लुतोऽप्लुतवत्स्यादिति हि तस्यार्थः। एवं चतुर्धापि निर्वाहे स्पष्टे आर्षः प्रयोग इति श्रीधरोक्तिर्नादर्तव्या।।

**द्विवचनमिति।।** "सुप्तिङन्तम्" (पा.सू.1-4-14) इति अन्तग्रहणेन "सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति" इति ज्ञापितत्वादिति भावः। तेनेह न । कुमार्योर्वध्वोश्चागारं कुमार्यगारं वध्वगारमिति। स्पष्टं चेदं भाष्यादौ। द्विवचनान्तं प्रगृह्यं स्यादिति तु प्राचः प्रमाद एव।

**हरी एताविति।** इह शाकलं न। "प्लुतप्रगृह्य--" (पा.सू.6-1-125) इत्यत्र नित्यग्रहणादित्युक्तम्।

अत्र वृत्तिकारः-- "मणीवादिनां प्रतिषेधो वक्तव्यः" इति पठित्वा मणीव, रोदसीव, दम्पतीव, जम्पतीवेत्युदाजहार। तच्च मुनत्रयानुक्तत्वादप्रमाणमिति कैयटहरदत्तादयः।

एवं स्थिते--- "मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम"।। इति भारतप्रयोगं समर्थयते-- **इवार्थ इति। वशब्द इति।** "वं प्रचेतसि जानीयादिवार्थे च तदव्ययम्" इति मेदिनी।। "व वा यथा तथैवेवं साम्ये" इत्यमरग्रन्थ्याख्यावसरे "शात्रवं व पपुर्यशः" इति कालिदासप्रयोगस्याभियुक्तै-रुदाहृतत्वात्। "कादम्बखण्डितदलानि व पङ्कजानि"इत्यादिदर्शनाच्चेति भावः। यत्तु पाठान्तरं "वद्वा यथा तथा" इत्यादि; तदयुक्तम्, नामलिङ्गानुशासनप्रक्रमे तद्धितवतेरननुगुणत्वात् अपत्यसमूहादिपर्यायमध्येऽण्फिञ्वुञादीनामनुक्तेश्च।

अदसो मात् (पा.सू.1-1-12)।। इह एकारो नानुवर्तते, असम्भवात् इत्यभिप्रेत्याह--**ईदूताविति।** ननु उकारानुवृत्तिर्व्यर्था, स्त्रियौ फले वा अमू आसाते इत्यत्र पूर्वेणैव सिद्धेः, मुत्वस्यासिद्धत्वेऽप्येकारान्तत्वादत आह-- **रामकृष्णाविति।** पुंसि पूर्वेण न सिध्यति, औकारान्तत्वादिति भावः। "अदसो मात्" (पा.सू.1-1-12) इति सूत्रं प्रति तु मूत्वमीत्वे नासिद्धे, आरम्भसामर्थ्यात्। एकारोऽपीति। तथा च एकाराननुवृत्तितात्पर्यग्रहणफलकं माद्ग्रहणमिति भावः।

अत्रेदं चिन्त्यम्- ईदूत्सप्तम्यर्थे प्रगृ ह्यम्, अदसः, एच्च द्विवचनमित्येव कुतो न सूत्रितम्। एवं हि पूर्वसूत्रस्थमीदूद्ग्रहणं प्रकृतसूत्रे माद्ग्रहणं च मास्तु। एकदेशानुवृत्तिक्लेशोऽपि नेति।।

**शे (पा. सू. १।१।१३)**छान्दसमपीदं संदर्भशुद्ध्यर्थमुक्तम्। वस्तुतस्त्वनुकरणार्थतया लोकार्थपि सम्भवत्येव ? त्वे रायो मे राय इत्यादौ त्वे इति, मे इति, इत्यनुकरणे प्रयोजनाभावात्। **अस्मे इति--** अस्मभ्यमित्यर्थः। भ्यसः "सुपां सुलुक्" (पा.सू.7-2-39) इति शे आदेशः। "शेषे लोपः" (पा.सू.7-2-90)।।

**निपात (पा. सू. १।१।१४)** अनाङिति पर्युदासादेवाजूपनिपाते लब्धे निपातग्रहणमुत्तरार्थं स्पष्टार्थमिहैव कृतम्।

**आ एवमिति।** पूर्वं प्रक्रान्तस्य वाक्यार्थस्यान्यथात्वद्योतकोऽयमाकारः। पूर्वमित्थं नामंस्था इदानीं त्ववें मन्यसे इत्यर्थः।

**आ एवं किलेति।** स्मरणद्योतकोऽयमाकारः। **वाक्येत्यादि।** तथा च भाष्यम्--

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।

एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्।।1।।इति।

अत्र अङिल्लक्षण एव तात्पर्यं लाघवात्। अन्यस्य ङित्वं त्वर्थसिद्धम्। ईषदर्थेत्यादिस्तु अवयुत्यानुवादः। एवं च अभ्र आँ अप इत्यत्र सप्तम्यर्थवृत्तेरप्याकारस्य ङित्वात् "आङोऽनुनासिकश्छन्दसि"(पा.सू.6-1-126) इति प्रवर्तत इति भावः।।

**ओत् (पा. सू. १।१।१५)** निपातः किम् ? देवोऽसि वायवाहि।

**सम्बुद्धौ (पा. सू. १।१।१६)** ऋषिर्वेदः "तदुक्तमृषिणा" इत्यादौ तथा दर्शनादित्यभिप्रेत्याह- अवैदिक इति। सम्बुद्धौ किम् ? अहो इति। अत्र परत्वाद्विकल्पो मा भूत्। यत्तु "ओत्" इत्यत्र निपातानुवृत्तेरिह च संबुद्धिग्रहणस्य प्रत्युदाहरणं वृत्यादावुक्तं गवित्ययमाहेति। तन्न, तत्र प्रगृह्यसञ्ज्ञासत्त्वेऽपि प्रकृतिभावाप्रसक्तेः। "इकोऽसवर्णे" (पा.सू.6-1-127) इत्यत्र हि पदान्तग्रहणमनुवर्तत इत्यकरे स्पष्टम्। एवं च "प्लुतप्रगृह्या" (पा.सू.6-1-125) इति सूत्रे तत्सम्बन्ध आवश्यकः। गविति च न पदम्। अनुकार्यानुकरणयोरभेदविवक्षया अर्थवत्वाभावेन विभक्तेरनुत्पादात्।।

**उञः (पा. सू. १।१।१७)** "निपात एकाज्"(पा.सू.1-1-14) इति प्राप्ते विभाषेयम्।।

**ॐ (पा. सू. १।१।१८) अनुनासिक इति।** तेनास्मिन् परे "यरोऽनुनासिक-" इति विकल्पः। यदेतनूँ इति पठसि, यदेतनूँ इति वा तद्दीर्घमित्यादि। एतदर्थमेव तत्रानुनासिकग्रहणम्, अन्यथा यरो ञमि ञम्वेत्येवावक्ष्यत्।।

**मय उञो वो वा (पा. सू. ८।३३३) मयः परस्येति।** परादिति तु प्राचः प्रमादः। "षष्ठीनिर्दिष्टस्य हि आदेशा उच्यन्ते" इति भाष्यात् आदेशविधौ स्थानिनः षष्ठ्या एव न्याय्यत्वाच्च।

**असिद्धत्वादिति।** अत एवेदं वत्वं त्रिपाद्यां विधीयते। प्रकृतिभावमात्रबाधनार्थत्वे हि "इको यण्--"(पा.सू.6-1-77) इत्यनन्तरं मय उञो वेत्येवावक्ष्यत्। यणं चान्वर्तयिष्यत्।

इह मय उञ इतौ परे अष्टाविंशतिरूपाणि। तथा हि "उञः" इति प्रगृह्यत्वे-- "किमु इति'। वत्वपक्षे -- "किम्विति'। ॐ आदेशे - "किमूँ इति'। आदेशस्य स्थानिवत्वेन "मय उञ--"(पा.सू.8-3-33) इति प्रकृतिभावापवादभूते आन्तरतम्यादनुनासिके वकारे--"किम्विंति' । अनुनासिकाननुनासिकयोर्वकारयोः " मयो यण" इति द्वित्वस्य मकारस्य "अनचि च"(पा.सू.8-4-87)इति द्वित्वस्य च विकल्पेन वत्वपक्षे रूपाष्टकम्। तदभावे द्वयमिति दशकम्। प्रहगृह्यसञ्ज्ञाविरहपक्षे "मय उञ--" (पा.सू.8-4-64) इति वत्वस्यासिद्धत्वात् "इको यण्-" (पा.सू.6-1-77) इति यणेव, तस्य सिद्धत्वान्मोऽनुस्वारे "वा पदान्तस्य"(पा.सू.8-4-59)इति परसवर्णपक्षे अनुनासिकाननुनासिकवकारद्वयोपेतमेकादशं रूपम्। अनुनासिकस्य द्वित्वे "हलो यमाम्" (पा.सू.8-4-64)इति लोपस्य वैकल्पिकत्वादकरणे त्रिवकारं द्वादशं रूपम्। परसवर्णाभावपक्षे अनुस्वारस्य यर्त्वात्त्वापाक्षिके द्वित्वे द्वे। संकलनया चतुर्दश। इतिशब्देकारस्य "अणोऽप्रगृह्रस्य"(पा.सू.8-4-57) इत्यनुनासिकविकल्पा-दष्टाविंशतिरिति।।

।। इत्यच्सन्धिः।।

**।। अथ हल्सन्धिप्रकरणम्।।**

**स्तोः श्चुना (पा. सू. ८।४।३९)** स्तोरिति समाहारद्वन्द्वः। सौत्रं पुंस्त्वम्। **श्चुनेति।** "सह युक्त--" इति सूत्रे विनापि तद्योगं तृतीयेति वक्ष्यते। योग इत्येतदध्याहारलभ्यम्। अत्र स्थान्यादेशयोर्यथासंख्यम्। निमित्तकार्यिणोस्तु न, "शात्" (पा.सू.8-4-44) इति ज्ञापकात्। "अल्पाच्तरम्" (पा.सू.2-2-34) इत्यादौ तु सौत्रत्वात् श्चुत्वं न। तज्ज्ञानमित्यादौ तु भवत्येव। "स्तोः श्चौ श्चुः" इति सुवचम्। न च "तस्मिन्निति निर्दिष्टे-- " (पा.सू.1-1-66) इति परिभाषोपस्थानेन "यज्ञः" "याच्ञा" इत्यादि न सिध्येत्। "शात्"(पा.सू.8-4-44) इति लिङ्गेन तस्या इहानुपस्थानात्।।

**ष्टुना (पा. सू. ८।४।४०)** इहापि कार्यिनिमित्तयोर्यथासंख्यं न । "तोष्षि" (पा.सू. 8-4-43) इति ज्ञापकात्। ष्टौ ष्टुरिति सुवचम्। ईट्टे, ईष्टे इत्यादौ "न पदान्तात्--" (पा.सू. 8-4-42) इति ज्ञापकान्न दोषः।

**सर्पिष्टममिति।** "ह्रस्वात्तादौ--"(पा.सू.8-3-101) इति षत्वम्।

**प्रत्यये भाषायामिति**। यत्तु प्राचा मयटि नित्यमिति पठितम्, यच्च हलन्तप्रकरणे षण्णां, षड्णामित्युदाहृतम्, यच्च "यरोऽनुनासिक--" (पा.सू.8-4-45) इति वाऽनुनासिक इति तत्र व्याख्यातं, तत्सर्वं भाष्यविरोधादुपेक्ष्यम्।

**यवादिगण इति।** "यचि भं तसौ मत्वर्थे" इति संहितया पाठे तसाविति तात्पूर्वं दकारं प्रश्लिष्य भत्वेनाप्येतत्समाधातुं शक्यम्।।

**उदः स्था --"(पा. सू. 8.4.61)** "अनुस्वारस्य ययि--" (पा.सू.8-4-58) इत्यत्र समस्तमपि सवर्णग्रहणमिह निष्कृष्य सम्बध्यते, एकदेशे स्वरितत्वप्रतिज्ञानादित्याशयेनाह-- **पूर्वसवर्णः स्यादिति।**

**अघोषस्येत्यादि।** एतेन सस्य तकार इति प्राचां ग्रन्थाः प्रत्युक्ताः। यदपीह "चयो द्वितीयाः शरि" इत्यस्योपन्यसनं, तदतिरभसात्।।

**तच्छिव इति।** यत्तु प्राचा तत् शिव इत्यत्र जश्त्वे कृते "खरि च" (पा.सू.8-4-55) इत्युक्तम्। तन्न, तदो दान्तत्वेन जश्त्वोपन्यासवैयर्थ्यात्। यत्तु तत्पौत्रेणोक्तं तदो "वाऽवसाने" (पा.सू.8-4-56) इति चर्त्वे पश्चाच्छिव इत्यनेन सम्बन्धे "झलां जशोऽन्ते" (पा.सू.8-2-39) इति जश्त्वे "खरि च" (पा.सू.8-4-54) इति चर्त्वमिति, तदतिस्थवीयः। जश्त्वं प्रति अवसाने चर्त्वस्यापवादत्वात्। जश्त्वे शिवशब्दानपेक्षणाच्च। भाविन्यवसानभङ्गे "वावसाने"(पा.सू.8-4-56) इत्यस्य पूर्वमप्रवृत्तेश्च। प्रवृत्तस्य वा निवृत्तिसम्भवात्। उक्तं च "अकृतव्यूहाः पाणिनीयाः" इति, "कृतमपि शास्त्रं निवर्तयन्ति" इति च। अन्यथा हरिरयमित्यत्रापि त्वदुक्तरीत्या प्रवृत्तो विसर्गः केन वार्यताम्। अथ तनोतीति तदिति क्विबन्तं ब्रूषे एवमपि जश्त्वेन दकारोऽस्तु। चर्त्वे कृते श्चुत्वमिति तु न न्याय्यम्। श्चुत्वं प्रति चर्त्वस्यासिद्धत्वात्। यत्तु "न मु ने" (पा.सू.8-3-3) इत्यत्र "न' इति योगं विभज्यासिद्धत्वमिह नेत्याहुः। तदपि न, असिद्धत्वेऽपि रूपसिध्दौ निर्बाधायां योगविभागस्यागतिकगतिभूतस्येहाश्रयणे प्रमाणाभावात्।।

**आक्रंस्यत इति।** "आङ उद्गमने" (पा.सू.1-3-40) इति तङ्। "स्नुक्रमोः--"(पा.सू.7-2-36) इति नेट्।।

**समसम्बन्धी विधिरिति।।** समकर्मकं विधानमिति तु नोक्तम्। अनुवाद्ययोरपि यथासंख्यस्येष्टत्वात्। "समूलाकृतजीवेषु हन्कृञ्ग्रहः" (पा.सू.3-4-36) इत्यत्र यथा।।

